Sanskrit Sahitya Parishat Series No. 40

# SVARGĪYA-HASANAM

( a Satire )

*by*

"BURODĀ"



*...RIT SAHITYA PARISHAT*

... Dinendra Street, Calcutta-700004.

*Published by :*
Dr. D. N. Chakrabarty Sastri
Sanskrit Sahitya Parishat
168/1 Raja Dinendra Street
Calcutta-4

First Edition
April, 1977

Price Rs. 5/-

*Printed by :*
Suresh Dutta
Modern Printers
12, Ultadanga Main Road, Calcutta-67

Dr. Usha Satyavrat.
with
deep regards and compliments.
S. Chattopadhyaya
18.5.77

বুড়োদা-ভণিতম্

# স্বর্গীয়-হসনম্

১৩৮৩ বঙ্গীয়-শ্রীপঞ্চম্যাং
প্রকাশিতম্

अकिञ्चित्करमिदं प्रहसनं सादरं सप्रश्रयं
समर्प्यते विद्वद्वरेण्याय मय्यशेष-प्रीतिमते
वर्धमान-विश्वविद्यालयस्योपकुलपतये
श्रीरमारञ्जन-मुखोपाध्याय-रसिक-वर्याय
प्रीतिमुग्धेन बुड़ोदा-समाख्येनारसिकेन ।

# निवेदनम्

नमो रसिकजनेभ्यः,

रचितमेकदा कविसार्वभौमेन
रवीन्द्रनाथेन स्वर्गीय-प्रहसनम्।
सरसं तत्प्रहसनमक्षममपि मां
कृतवत् प्रोत्साहितम्। स्वर्गीय-हसनं
तस्यैव दीनमनुकरणमिति तु मया
सबहुमानं सानन्दं स्वीक्रियते।

* * *

संकटबहुलस्तु कालोऽयमाधुनिकः,
साम्राज्यमदत्वे रूपक-जगति
युक्ति-तर्क-सचिवस्य बुद्धि-राजस्य,
योऽसौ तीक्ष्णदण्ड इत्यस्ति परिज्ञातम्।
निर्वासन-भयभीतो वराकः स हास्य-रसः;
तमेव विनोदयितुं प्रयतितं मयेति तथ्यम्।
नास्त्यत्र कोऽपि गूढार्थो ध्वनिर्वा;
नमस्तेभ्यो गूढार्थ-रसिकेभ्यः समालोचकेभ्यः।

* * *

सदैव मयि स्नेहपरायणस्तत्रभवान्
संस्कृत-साहित्य-परिषत्-पत्रिका-सम्पादकः
श्रीरामधनशास्त्रि-महोदयः,
तदेव स्नेह-प्राचुर्यमस्य रूपकस्य प्रकाशने
प्रथमो हेतुः, सहकारि-कारणं
संस्कृत-साहित्य-परिषन्नट-सुहृदां प्रोत्साहनम्।
नैतन्मे रीति-रक्षार्थं कृतज्ञता-ज्ञापनम्,
सादरं सानन्दमिदमपि स्वीक्रियते।

रचयितुः

१३८३ वङ्गाब्दीय श्रीपञ्चम्याम्

# स्वर्गीय-हसनम्

[ "बुड़ोदा" विरचितम् ]

( आलोकितमञ्चे कोदण्डाकारेण सज्जितान्यासनानि ।
अपसारिता यवनिका, ततः प्रविशति शुभ्रवसनः प्रौढ़ः सूत्रधारः )

सूत्रधार :—गणदेवं नमस्कृत्य गणेशांस्तदनन्तरम् ।
नटनाथमहं नौमि वृद्धं तं नाट्यरक्षकम् ।।

निवेद्य च—

समागतान् सहृदयवर्यान् सविनयं प्रणामाञ्जलिं स्वागत-सम्भाषणञ्च, विज्ञापयितुमिच्छामि किञ्चिन्मनोगतं मे। नाट्य-प्रेक्षका अत्रभवन्तः, आमन्त्रण-पत्रं समासाद्य—अत्र समायाता अविगणय्य बहुक्लेशान्। परं विचार्यतां तावत् कुत्रावकाशोऽद्यत्वे नाट्यस्येति। किमस्मिन्नेव धरणीतले ? नहि—नहि,—तथ्यं भाषे यदियमवनी नाट्यधर्मेण हीना कथमिति चेत्— ?
सर्वं काव्यं कुटिलमतिभिस्तार्किकैः सुष्ठु पिष्टम् ।
तर्हि किं स्वर्लोके !—नहि—नहि—
स्वर्गे लोके वसतिमधुना राजनीतिरवाप्ता
मत्ता देवाः सतत-कलहे कुत्र नाट्यावकाशः ।।
बुद्धि-प्रधानेऽस्मिन् युगे स्वर्गे मर्त्यलोके च तर्को वा राजनीतिर्वा उभयमपि वा प्रसरतितराम्। नास्त्यद्यत्वे कल्पनावकाशः। कुतस्तर्हि काव्यं नाट्यं वा ? मर्त्यलोकस्य दशायां तावद् भवन्त एव प्रमाणम्। स्वर्गेऽपि सवितर्क-राजनीतिरधुना काव्यं हन्तुं व्यवसिता। किं नैव विश्वसन्ति भवन्तः ? को दोषो भवताम्। ममापि नास्ति

पूर्णो विश्वासः। परं सुहृद्भिनटराज इति नाम यस्मै दत्तं,—न जाने सोपहासं न वा,—तेन 'वुड़ोदा'-समाख्येन संस्कृत-साहित्य-परिषन्नटवृद्धेन कथितमेतत्, तच्च नाट्याकारेणैव। तदेव स्वर्गीय-हसनं श्रावयितुं प्रदर्शयितुञ्च प्रयतामहे वयमद्य। कार्यवशादहमस्मि देवगुरु बृहस्पतिः, अधुना तु देवराजस्येन्द्रस्य प्रधानामात्योऽमात्यपरिषदि। कदापि निर्जने सभाकक्षे चिन्तासक्तोऽहमुपविष्टः (उपविशति)। वैतालिकपुरःसरोऽयमेति देवराजः।

(वंगीय-यात्रारीतिमनुसृत्य गायन् प्रविशति वैतालिकः।)

वैतालिक :—

जयतु जयतु देव-पुरन्दरः
जयतु वज्रधारी।
सदा जागरूकः समस्तलोचनः,
दुष्ट-दैत्य-दर्प-निसूदनः,
अमराधिपः शचीवल्लभो जयतु—
जयतु कामचारी।

(गीतावसरेऽलक्षितः प्रविशति देवराजः। गीताक्षरेण न तुष्टः स आदिशति—)

इन्द्र :— मूर्ख वैतालिक!

कुरु रुद्धं ते गानम्। मृषेयं जयघोषणा।—जानन्ति सर्वे—सर्वतो रुद्धप्रसरोऽयं देवराजः, निर्धार्यते सर्वं मन्त्रि-परिषदा—तत्र स्वनामलेखनमेव तस्य कर्मेति। तत् कथं तस्यैव जयघोषणा? घोषय जयवार्तां तावद् गणदेवस्य गणेशानां वा सर्वशक्तिमतां नेतृवर्याणाम्—ये तावदमात्यपदमधितिष्ठन्ति। कोऽयमिन्द्रः? पुनर्न वक्तव्यमिन्द्रः कामचारीति। श्रवणपदवीं चेदायास्यत्ययं

शब्दो वाम-मार्गावलम्बिनाम्—उत्थापयिष्यते त्वरितमनास्था-प्रस्तावः। कुत्रासौ वृद्धो बृहस्पतिर्नाम ? तमेवाह्वय। सर्वानर्थस्य मूलमयमेव। (वैतालिकः प्रस्थितः)

(बृहस्पतिरासनादुत्थाय प्राग्रेसरो भवति)

बृहस्पति :—देवराज, अहमत्रैव।

इन्द्र :—(सविस्मयम्) अत्रैव ! श्रुतं तर्हि यन्मयोक्तम् ?

बृहस्पति :—वज्रिन्, नाहं बधिरः। (सहासम्) परं किमायाति याति वा श्रुतेनाश्रुतेन च ! राजनीतिशास्त्रे प्रत्यक्षे दुर्भाषणमेव दोषाय,—न तु परोक्षे ;—नाहमासं भवतां पुरतः।

इन्द्र :—यातु।—किं निर्धारितं भवता ?

बृहस्पति :—मया ? कस्मिन्नु विषये ?

इन्द्र :—विषयस्तावदधुना एक एव,—नास्ति द्वितीयः। किं मया करणीयम् ?

बृहस्पति :—अपेक्षा देवराज !

इन्द्र :—अपेक्षा ! कस्य ? कथं वा ?

बृहस्पति :—फलपाकस्यापेक्षा देवराज ! संरोपितो वृक्षः,—पुष्पितः फलितश्चासौ। मन्ये, फलमपि यास्यति पक्वतां नातिचिरेणैव।

इन्द्र :—(शान्तस्वरेण) ज्ञातः किं वरुणस्याभिप्रायः ?

बृहस्पति :—ज्ञातुमिच्छन्ति भवन्तः किं वरुणस्यैवाभिप्रायम् ?

इन्द्र :—स्वर्गीयसंविधानानुसारेण देव एव देवराजपदमर्हति।

बृहस्पति :—देवश्रेष्ठ ! नैतल्लिखितमस्ति स्वर्गीय-संविधने।

इन्द्र :—अलिखितापि रीतिरियमादित एव प्रचलति, अतो मान्या।

बृहस्पति :—परिवर्तनं याति प्रचलितापि रीतिः,—संशोधनमपि भवति लिखित-संविधानस्य। अपिच—अदितिस्तथा उर्वशी निर्वाचिते वर्तेते।

इन्द्र :—हुम्। अप्सरा अपि देवीति मान्या। किन्तु किं नारी तावदधि-कर्तुमर्हति देवराजपदम् ?

बृहस्पति :—नैतन्निषिद्धं स्वर्गीय-संविधाने देवराज !

इन्द्र :—अदितिस्तु जननीति मान्या। वशीकर्तव्या भक्तिश्रद्धा-प्रदर्शनेन। किन्तु—( ईषद्विहस्य ) उर्वशी ! धूर्तेयं नटी। तथापि—

बृहस्पति :—शचीपते ! युवतिचित्तजयाय यासीत् प्राचीना रीतिः,—यस्याश्च परं निपुणो भवान्—अत्र सा खलु विफलतामेष्यतीति मन्ये। शिल्प-कर्मैतत्। परिवर्तते कालेन तस्य रीतिः। नाधुना वाक्-चातुर्येणैव मुग्धा भवन्ति युवतयः।

इन्द्र :—तर्हि किमुत्कोचेन—

बृहस्पति :—अ-ह-ह-, नैतदुच्चार्यम्। अभद्रोऽयं शब्दः। उपहारेण,—उपायनेन।

इन्द्र :—(सहासम्) एवमेव,—बुद्धं मया। किन्तु किं लब्धमस्माभिर्गणतन्त्रतः ?

बृहस्पति :—स्थिरत्वं भवतां देवराजपदस्य।

इन्द्र :—स्थिरत्वम् ? स्थिरत्वं कुत्र पश्यति भवान् ? भवतां मतमनुसृत्यैव निर्वाचनमनुष्ठापितम्। घटिता च मन्त्रिपरिषन्निर्वाचित-प्रतिनिधिभिः। परमधुना दृश्यते सर्वे ममैव विपक्षतामाचरन्ति।

बृहस्पति :—पूर्वं किं ते सर्वे भवतां स्वपक्षीया आसन् ?

इन्द्र :—तदेवोच्यते मया। आसन् सर्वे मम विरोधिनः, अधुनापि तथैव।

बृहस्पति :—देवराज, सृष्टिकालादारभ्य स्वर्लोके प्रचलितमासीदेकनायकत्वं भवतः। विक्षुब्धा जाताः सर्वे।

इन्द्र :—किमधुना तुष्टाः सर्वे प्रशमितश्च विक्षोभः ?

बृहस्पति :—देवश्रेष्ठ,—स्वर्गे तावद् वर्तते संघत्रयम्,—देवसंघः, स्वर्लोक-वासि-नरसंघः, नरकवासि-संघश्चेति। विदितमेव भवतां संघाना-मेषां वक्तव्यम्। आचरणे, प्रचारणे विक्षोभ-प्रदर्शने चासन् ते परस्पर-विरुद्धाः। परमिन्द्रविरोधितायामासीत्तेषामैकमत्यम्। तदेवैकमत्यं तु चूर्णीकृतं निर्वाचनद्वारेण।

इन्द्र :—सुष्ठु कृतम्। किन्तु कथं भवता संघत्रयत एव सदस्या गृहीता मन्त्रिपरिषदि। देवसंघस्यैवासीत् संख्यागरिष्ठता विधानसभायाम्।

बृहस्पति :—(सहासं) गणतन्त्रे संख्यागरिष्ठता न चिरस्थायिनी कस्यापि संघस्य। संघात् संघान्तरगमनं सदस्यानां केन वार्यते ? देवसंघस्य संख्या-गरिष्ठताभविष्यत् क्षणस्थायिनी यदि मया संघमेलनमेव नाघटापयिष्यत। क्षमतास्वादमासाद्य विभक्ता भविष्यन्ति संघा नातिचिरेणैवोपसंघेषु। संघभेदनस्य प्रकृष्टमस्त्रमेव मन्त्रिपरिषदि संघमेलनम्।

इन्द्र :—संघा भविष्यन्ति विभक्ता उपसंघेषु, रक्षितश्च भविष्यति भवतः स्वार्थः। परं देशस्य, स्वर्लोकस्य स्वार्थः ?

बृहस्पति :—देवराज ! स्वार्थरक्षायै स्वार्थसिद्धये वा संघः, संघस्वार्थाय च देशः,—देशाय तावत् किं तन्नाहं जाने।

इन्द्रः—एतावता बुद्धं यत् संघाश्रयणम्, संघघटनं तथा संघभेदनं सर्वमेतत् स्वार्थसिद्धये। लब्धमद्य भवतः प्रकृष्टं ज्ञानम्। किन्तु वरुणः ? तस्याभिप्रायस्तु—

बृहस्पति :—देवराज,—भित्तीनामपि वर्तन्ते श्रवणेन्द्रियाणि। तत् सर्वमुच्चैर्न वक्तव्यम्। कर्णे कथयामि।

( बृहस्पतिरिन्द्रस्य कर्णे कथयति, कर्णे कथनस्यावसरे द्वयोर्मूकाभिनयः )

इन्द्र :—( सविस्मयम् ) किमेवम् ? नरा नरविरोधिनः !

बृहस्पति :—एवमेव। देवा यथा देवविरोधिनः। पुनरपि कथ्यते मया,—भित्तीनामस्ति श्रवणेन्द्रियम्। अन्तरालं गच्छन्तु भवन्तः, यथाकालमागन्तव्यम्। अहमपि स्वकर्मण्यभियुक्तो भवामि।

इन्द्र :—भवतु तथैव।

( इन्द्रः सहसा बृहस्पतेश्चरणे प्रणमति )

बृहस्पति :—( सविस्मयं पश्चादपसृत्य )—अह-ह, किमेतत् ? कल्याणमस्तु कल्याणमस्तु।

इन्द्र :—भविष्यति भवतां शिक्षयाशीर्वादेन च। अद्य लब्धो मया भवता राजनीतेर्मूलमन्त्रः। ( प्रस्थितः )

बृहस्पति :—( इन्द्रगमनमार्गे दत्तदृष्टिः ) अधुना तु श्रद्धायाः परमातिशय्यं लक्ष्यते। भवतु नाम—।

( स्वकीयसन उपविश्य पार्श्वस्थित-दूरभाषण-यन्त्रेण कथयति )

भोः संख्यां कथय।—किं नव ? — मम ? एकः—।— कल्याणमस्तु ते।—सर्वं सुसम्पन्नं किम् ? —चाराः, चाराः — मन्त्रणाकक्षेषु—मन्त्रि-परिषत्-सदस्यानां गृहेषु— —सुगुप्तम्—? वरुणः — ? न जानासि ? —हुम्। उर्वशी ? कुत्र ? किम् — ? तदपि न ज्ञायते। यतस्व ज्ञातुम्। हूँ—हुँ— अधुनैव।

( दूर-भाषणयन्त्रं संस्थाप्य दिनलिपि-पुस्तके किमपि लिखति। प्रविशतः किमप्यस्फुटस्वरेणालपन्तावेव अशोक आकवरश्च। अशोको गैरिक-वेषेण, आकवश्च महम्मदीयवेशेन सहितः )

अशोक :—नमो बुद्धाय। धर्मसिद्धिर्भवतु सर्वेषाम् —।

आकवर :—जयतु दीन्-इलाहिः —।

बृहस्पति :—( पुस्तकं संस्थाप्य कृताञ्जलि नमस्कृत्य ) स्वागतम् — स्वागतम्। आसनं तावत्—(हस्तेनासनं दर्शयति, तौ चोपविशतः) अपि कुशलं देवानां प्रियस्य प्रियदर्शिनः, अपि च शाहेनशाहस्याकवरस्य ?

उभौ—( सहासम् ) एवमेवम्—हेँ—हेँ—हेँ—

अशोक :—कुशलं सम्यक्-सम्बुद्धस्य शाक्यमुनेः कृपया भवताञ्चाशीर्वादेन।

आकवर :—आल्लाह-कृपया कुशलमेव। — भवताम् - ?

बृहस्पति :—भवतां सर्वेषामकृपणसहायतया कुशलमेव।

अशोकाकवरौ—( अहमहमिकया ) देवराजस्य—स्वर्लोक-शाहेन-शाहस्य— शक्रस्य —

बृहस्पति :—( तौ निवारयन् ) कुशलं कुशलम्। किन्तु विदितमेतद् युवयो-

यदिन्द्राय न रोचते राजनीतिः। अपिच नाभिज्ञोऽसौ गणतान्त्रिके शासन-व्यापारे। उच्यते च तेन प्रायश एव—नाहं शक्नोमि चालयितुं राष्ट्रकार्याणीति। दृश्यतां तावन्ममापि दुर्गतिम्। वार्धक्येऽपि स्कन्धे वहाम्यर्थ-प्रतिरक्षा-वैदेशिक-विभागानां भारम्। इन्द्रेणैव न्यस्तोऽयं दुर्वहो भारः।

अशोक :—( साग्रहम् ) सत्यं सत्यम्। नैतत् समीचीनम्। गुरुभार एव विभागत्रयस्य। अपिच नैतादृशि कर्मण्यभ्यस्ता भवन्तः। नेयं शास्त्रचर्चा।

आकवर :—एतावन्तं कालं यावत् स्वर्लोकशासनं तु स्वत एवाभवत्। नासीत् कोऽपि संकटः। परमाधुनिके काले—

बृहस्पति :—एवमेव। आधुनिके काले जातं संकटानां बाहुल्यम्।

अशोक :—तत्रभवान् देवराजो यदि योग्यं मन्यते,—भवताञ्चाभिमतं भवति तर्हि विभागत्रयत एकस्य, — विभागद्वयस्य वा — कार्यजातम्— अहम् — ( अर्धमुच्चार्य )—आवामपि—( आकवरमीक्षते )—

आकवर :—अवश्यमेव। —परं वयोवृद्धो भवान्। मयि स्थिते भवतः क्लेशस्वीकारः कथं नु सम्भाव्यते। अतिकठिनं भवतो गुरुत्वपूर्णस्य जनस्वास्थ्यविभागस्य भारवहनम्। एकदा तु मया पूर्णस्य हिन्दुस्थानस्य शासन-व्यापारे सर्वेषामेव विभागानां कार्यजातं पर्यवेक्षितम्।

अशोक :—किं मयापि तन्न कृतम्? अपिच स्वर्लोकशासनव्यापारे नवीनस्त्वम्। मया च ज्ञायतेऽस्य नाडी-नक्षत्राणामवस्थानम्।

बृहस्पति :—तिष्ठतु तावत्। अवसरे सति विज्ञापयिष्याम्यहमेव युवयोः सदिच्छामिन्द्राय। परं धुन्ध-पुंगयोर्विषये किं सिद्धान्तितं युवाभ्याम्?

आकवर :—तयोर्वशीकरणे बाधा तावदेकैव। अनन्यसाधारणं तयोस्तर्के नैपुण्यम्। अन्येषां युक्तिखण्डने दक्षौ तौ। अपिच यत्र

तत्रालापच्छलेन मनोगतमन्यस्य ज्ञातुं सदैव यतमानौ—साफल्यं चाधिगच्छतः। परं स्वाशयं कथमपि न प्रकाशयतः।

बृहस्पति :—एवमेव। नरलोके धुन्ध आसीत् श्रमिकनेता, पुंगश्चासीत् कर्षकाणां नेता। देवानां प्रियेण किं मन्यते ?

अशोक :—सद्धर्मोपदेशश्च मया दत्तः। ताभ्यां च श्रुतं सर्वं साग्रहमेव परं मदीयमत-खण्डनातिरिक्तं किमपि नोक्तम्।

बृहस्पति :—तयोर्वशीकरणे उपायः कश्चिदुद्भावयितव्यो युवाभ्यामेव। पश्यतां तावत्,—युवां, धुन्ध-पुंगौ चत्वार एते नरप्रतिनिधयः। परं युवां तु स्वर्गवासि-नरकेन्द्रात् निर्वाचितौ। पुण्यवतामाश्रयोऽयं स्वर्गः। धुन्ध-पुंगौ तु नरकवासि-नरकेन्द्रात्, पापाचारिणामेव केन्द्रात् निर्वाचितौ। नास्त्यत्र किं कोऽपि विशेषः ? ताभ्यां सह युवयोर्मेलनं किं समीचीनम् ?

अशोक :—समीचीनमसमीचीनं वा तत्तु निर्धार्यते प्रयोजनमपेक्ष्य। आकवरेण किं मन्यते ?

आकवर :—तथ्यमुक्तं भवता। प्रयोजनमपेक्ष्यैव मया हिन्दु-मुस्लिम-मेलने प्रयतितम्।

अशोक :—सुष्ठु कृतम्। राजपुतवंशीयैरेव राजपुतवंशीया धानापेषं पिनष्टाः। लाभस्तावद्भवत्तवैव।

आकवर :—नैतत्तथ्यमुक्तं भवता। लाभो नाभवत् किं मानसिंहादीनाम् ? न ते किं राजपुतवंशीयाः ?

बृहस्पति :—तथैव बोधताम्। धुन्ध-पुंग-पेषणे लाभस्तावद् युवयोरेव।

आकवर :—घोरे बन्धनागारे निक्षेप्तव्यौ द्वौ। तत्रापि च यथा सम्यक् प्रहृतौ भवतस्तथा करणीयम्।

बृहस्पति :—विपक्ष-दमने किमयमेक एव उपायः ?

अशोक :—अपरश्च सद्धर्मोपदेशः।

बृहस्पति :—देवानां प्रियेण किं धर्मोपदेशेनैव बहुधा विच्छिन्ने भारतवर्षे राष्ट्रियमैक्यमानीतम् ?

आकवर :—( सहासम् ) कलिंगास्तत्र प्रमाणम् । श्रुतं मया विदुषां मुखात् ।

अशोक :—एवमेव । आसीन्मे दक्षिणे करे तरवारिः, वामे धर्मचक्रम् ।

बृहस्पति :—युवां सर्वथा प्राचीनौ । किं नास्त्यत्रान्य उपायः ? अप्सरसः किं न विद्यन्ते स्वर्लोके ? नास्त्यत्र किं सोमरसः ?

अशोक :—धुन्ध-पुंगौ तु नरकमधिवसतः, प्रवेशस्तत्र सोमरसस्य स्वर्लोक-नटीनां वा निषिद्ध एव ।

बृहस्पति :—निषिद्धानि द्रव्याण्येव समधिकप्रियाणि ।

आकवर :—एवम् । निषिद्धद्रव्ये प्रलुब्धीकरणम्, ततः स्ववशानयनम् । साधुः, साधुः खल्वयमुपायः ।

अशोक :—परमस्माकं को लाभस्तत्र ।

बृहस्पति :—प्रागेवोक्तं मया,—विभागद्वयस्य भारम्— । अपि च भोग-विलासी, इन्द्रियासक्तोऽमिताचारी—खलु—इन्द्रः । तस्मै न रोचतेतरां देवराजपदम्, न च जानात्यसौ आधुनिकं शासन-कौशलम् । पदत्यागमपि करिष्यति न वा को जानाति ?

अशोक :—एवम् ! ( आकवरमिंगितेन वोधयति बृहस्पतेराशयम् )

आकवर :—तर्हि किं भवानेव भविष्यति देवराजः ?

बृहस्पति :—नहि-नहि-नहि । नास्ति मे वासना । अपि च वरुणो वर्तते । यदि—इन्द्रः—पदत्यागमेव करोति,—अन्ततो गत्वा,—यदि च भवतां सर्वेषामात्यन्तिकी वासना जायते,—अर्थात्—सर्वेषां भवतामैकमत्यं दृश्यते,—यदयं ( आत्मानं निर्दिश्य ) वृद्ध एव भवतु देवराज इति,—तदा तु भविष्यत्यसम्भव-पराहतमस्वीकरणं मम पक्षतः । बन्धूनां भवतामनुरोधः—हैँ—हैँ—हैँ— ।

अशोक :—आकवर,—एहि । आवयोर्मन्त्रणाकक्षं गच्छावः । परिकल्पना करणीया !

आकवरः—परिकल्पना-मन्त्री तु वरुण एव।

अशोक :—आः,—आवयोर्यत् करणीयं तदेव निर्धारयितव्यम्।

आकवर :—न मह्यं किमप्यर्धोक्तं रोचते। आवां बृहस्पतिमेव समर्थयिष्यावः, परमर्थ-प्रतिरक्षाविभागयोः कृते। वरुणः, आवां द्वौ, बृहस्पतिरिति वयमेव चत्वारः,—मन्ये उर्वश्यपि स्थास्यत्यस्माकं पक्षे। अनास्था-प्रस्तावो मयैवोत्थापयिष्यते। इन्द्रः स्वयं पदत्यागं करोतु वा न वा।

बृहस्पति :—अ-ह-ह- सहसा विदधीत न क्रियाम्। प्रयोजने सति कथयिष्यामि स्वयमहमेव,—परमिंगितेन।

अशोक :—तथाप्यस्ति विचारणीयम्। एहि—, नमः श्रावकाय।

आकवर :—जयतु दीन-इलाहिः।

(नमस्कृत्य गच्छतः)

बृहस्पति :—(तयोर्गमनमार्गे दत्तदृष्टिः) एताभ्यां द्वाभ्यामेव मन्ये गिलितं वड़िशयुक्तमामिषम्। किन्तु वरुणः ?—यातु—(दूरभाषणयन्त्रमादाय)—कति ?—तव ?—एकः।—अशोकाकवरौ स्मरसि ?—एवमेव—, अनास्था-प्रस्तावः—एवमेवम्—तयोरेकेनोत्थापयितव्यः,—द्वावेव प्रलोभयितव्यौ।—परं सावधानेन—एवम्—एवम्। (यन्त्रं संस्थाप्य) भवतु पश्यामि तावत्—(पूर्वनिर्दिष्टपुस्तिकायां किमपि लिखित्वा बहिर्गन्तुं प्रचलितः। इत्यवसरे पुरत एव प्रविशति शुभ्रवेषा वटुयाख्य-ताम्बूलपात्रहस्तादितिः)।

बृहस्पति :—(तां दृष्ट्वा) अहो सौभाग्यम्। जननी, अदितिः समायाता ! देवि,—गृहाण मे प्रणामाञ्जलिम् (नमस्करोति)

अदिति :—नौमि देवगुरुम (प्रतिनमस्कृत्य) चिन्ताकुल इव लक्ष्यसे ?

बृहस्पति :—एवमेव। आदावुपविशतु भवती, कथयामि सर्वम्।

(अदितिनिर्दिष्ट आसन उपविश्य ताम्बूलपात्रादेकं वदने निक्षिप्य—)

अदिति :—अधुना कथय यदिच्छसि कथयितुम् ।

बृहस्पति :—मन्त्रि-परिषत्-सभानुष्ठानात् पूर्वमेव भवद्दर्शनार्थी गन्तुकाम आसमहमेव । पुनः सौभाग्यात् स्वयमेव भवती समायाता ।

अदिति :—मां द्रष्टुम् ! कथम् ? युष्माकं राजनीतेर्जटिलता मया किमपि न बुध्यते । मह्यं न रोचते च तत् । एतत्तु ज्ञातमेव त्वया ।

बृहस्पति :—तथापि मन्त्रिपरिषदो माननीया सदस्या भवती, वहति च आत्मोन्नति-विभागस्य भारम् । सभानुष्ठानात् पूर्वमेव ज्ञातव्यं भवत्या सर्वं तथ्यम् ।

अदिति :—तथ्यं तु मया ज्ञायते,—मम विभागस्यान्येषामपि विभागानाम् ।

बृहस्पति :—तत्तु सत्यमेव । परं, साम्प्रतिके काले कोऽपि नवीनः संकटो जातः ।

अदिति :—नवीनः संकटः ? सर्वे संकटास्तु प्राचीना एव, नवीनमेव तेषां समाधानम् ।

बृहस्पति :—( विव्रतः ) नहि—नहि, तन्नोच्यते मया ।

अदिति :—तर्हि किमुच्यते ?

बृहस्पति :—विभेदो दृश्यते मन्त्रि-परिषदि साम्प्रतिके काले ।

अदिति :—उप्ते प्रारम्भे एव भेदबीजे किमपरं द्रष्टुमिच्छसि ?

बृहस्पति :—( भीतभीतः, द्विधा ग्रस्तश्च ) केनोप्तं भेदबीजम् ? नरकवासि-नरप्रतिनिधयो न सहन्ते स्वर्गवासिनां दर्शनमपि ।

अदिति :—ए-व-म् ? मया तु मन्यते देवा एव देवविरोधिनः । यातु—यदि तथ्यमेतद् यत्त्वयोक्तं, तर्हि मन्ये सुष्ठु जातम् । रक्षितं भविष्यत्य-धुना भरसाम्यम् ।

बृहस्पति :—कथंकारम् ?

अदिति :—कथंकारम् ? न जानासि किमपि ? आदावासन् देवा देव विरोधिनः । परस्पराद् भीतभीता आसन् सर्वे देवाः । नरा ऐकमत्यमाश्रित्य कं समर्थयिष्यन्तीति चिन्तया । अधुना तु विनष्टा सा सम्भावना ।

बृहस्पति :—कस्य सम्भावना ?

अदिति :—नरप्रतिनिधीनामैकमत्यस्य ।

बृहस्पति :—परमेवं विरोधे पर्याकुलं भविष्यति सर्वमेव तन्त्रम् ।

अदिति :—कथं भविष्यति ? आदित एव भूतम् ।

बृहस्पति :—सर्वेणानेनातिमात्रं पर्याकुल इन्द्रः । यद्येवं विरोध एव प्रचलति तर्हि पदत्यागमहं करिष्यामीति कथितमिन्द्रेण ।

अदिति :—किम् ? पदत्यागं करिष्यति देवराज इन्द्रः ?—कथितमिदं तेन ? —कारणं च तत्र मन्त्रिपरिषदि मतविरोध ? किमुन्मत्तोऽसि ?

बृहस्पति :—कथाप्रसङ्गेन तेनेदमुक्तम् ।

अदिति :—त्वया श्रुतम् ? त्यजतु देवराज-पदमिन्द्रः, अन्यः कोऽपि भविष्यति देवराजः ।

बृहस्पति :—को भविष्यति देवराजः ?

अदिति :—यस्मै रोचते, यं वा सर्वे समर्थं मानयन्ति ।

बृहस्पति :—किं वरुणः ?

अदिति :—कथं न बृहस्पतिः ? यथा तथा वा भवतु, नास्त्युत्साहो मेऽन्यापारेषु व्यापारं कर्तुम् । मम विभागेऽर्थाभावो जातः, चिन्तय तस्य दूरीकरणोपायः ।

बृहस्पति :—राष्ट्रेऽधुना सर्वत्रार्थाभावः, विद्यन्ते चाशुसमाधेयाः संकटाः ।— अधुना किमात्मोन्नतिविभागस्य कृते—

अदिति :—युक्तः किमधिकार्थव्यय इति ते वक्तव्यम् । न किम् ? शृणु ममोपदेशम् , संकटकाले आत्मोन्नतिरेव शरणम् ,—परं यदि संकटमुक्तिः काम्यते । यातु,—गच्छामि मम कक्षं यथाकालञ्चागमिष्यामि ।

( प्रस्थिता )

बृहस्पति :—दुर्बोधं खल्वस्या वृद्धडाकिन्या मनोगतम् । क उपायः । वरुणोऽन्वेष्टव्यः— ।

( त्वरितं प्रस्थितः )

( विपरीत-पार्श्वेन हिन्दी-चलच्चित्रनायिका यथा तथा गायन्ती प्रविशत्युर्वशी)

उर्वशी— मम चित्तम्—अतिक्षिप्तम्,—
दूरं गगनम्—प्रसार्य पक्षम्—
धावत्यनिर्देशम्।

( सुष्ठु बृहस्पतेर्गमनमार्गं पर्यवेक्ष्य परावृत्य तदासनसन्निकर्षमायाति। बृहस्पतेर्दिनपञ्जीकरणिकां दृष्ट्वा त्वरितमादाय पठितुमारभते, आदौ न बोधति, परं बुद्ध्वा सहासं पञ्जीकरणिकातः पत्रमेकमाच्छिद्य प्रसाधन-पेटिकायां सयत्नं रक्षति )

उर्वशी—द्विमुखः संग्रामोऽधुना बहुमुखो जातः। रुचिकरी भवितेयं राजनीति-क्रीड़ा। —भवतु ( दूरभाषणयन्त्र-मादाय )—भोः—धुन्धपुंग-महोदयौ —एवम्—किं युवामेव — अधुनैवागन्तव्यमत्र—अधुनैव—निर्जनं निर्जनं—नास्त्यत्र कोऽपि—विलम्बो नास्ति सभानुष्ठानस्य—अस्ति प्रयोजनीया कथा—एवमादावेव स्तोतव्यम् —धन्यवादः। (दूरभाषणयन्त्रं संस्थाप्यास्फुटस्वरेण गायन्ती प्रसाधनपारिपाट्यं साधयति।)

( तत आधुनिकवेशसज्जितौ धुन्ध-पुंगौ प्रविशतः )

धुन्ध :—भद्रे, कथमेवं त्वरितमाह्वानम्? किन्तु खल्वत्याहितम्?

पुंग :—क्षणकालात् पूर्वमेवासीद् भवती सहैवावाभ्यामालपन्ती।

उर्वशी—तदा यन्मयोक्तं तस्य प्रमाणमधुना वर्तते मे हस्तगतम्।

धुन्धः—देवमहिमा जयतु। किन्तु देवि, —राजनीति-व्यापारे स्वचक्षुः-कर्णयोरतिरिक्तमन्यत् किमपि नाधिरोहति मे प्रत्ययपदवीम्। किं करोमि, गुरोरादेशः।

पुंग :—द्रष्टुमिच्छामि प्रमाणम्। गुरो,—पश्य तावत्।

( उर्वशी पेटिकातो बृहस्पतेः पुस्तिकायाश्छिन्नं पत्रं बहिष्कृत्य दर्शयति। धुन्ध-पुंगौ पठित्वा चिन्तासक्तौ परं क्षणायैव )

धुन्ध :—सांकेतिकमेतत्, अस्य व्याख्यानम् ?

पुंग :—गुरो, —किमिदम् ? वाक्ये नास्ति कर्ता, कर्म, क्रिया वा।

उर्वशी—तेषां सन्निवेशोऽत्र कर्तव्यः।

धुन्ध :—कर्ता—'अहम्', क्रिया—'प्रतिशृणोमि'। हुँम्—बुध्यते सर्वं, न बुध्यते वा।

उर्वशी—सर्वं बुद्धं भवता। 'अहम्'—तावद् बृहस्पतिः। कर्मणोऽत्र सम्प्रदानत्वम्—'वाम्'—अशोकाकचराभ्यामिति—।

पुंग :—तौ द्वौ वृद्धमर्कटौ! किन्तु गुरो,—'अहम्' इन्द्रो वा वरुणो वा भवितुमर्हति।

धुन्ध :—कुतः समासादितमेतद् भवत्या ?

उर्वशी—( बृहस्पतेः पुस्तिकामादाय दर्शयति ) अस्मात्, छिन्नमेकं पत्रम्—

पुंग :—गुरो, आदिशतु नाम। धौतिमर्हतस्तौ।

( उर्वशी किमपि न बोधति, इंगितेन पुंगं पृच्छति, पुंगः प्रहारकरणमभिनयति, उर्वशी हसति )

धुन्ध :—( क्षणं विचिन्त्य दूरभाषणयन्त्रमादाय विकृत-स्वरेण) संख्या—एकः,—तव—ओं—नव ? —इन्द्रः कुत्र—किम्—एकाकी रुद्धद्वारकक्षे ? —अदितिः ?—( श्रुत्वा उच्चैर्हसति )

पुंग :—कुत्र किं वा करोति सा ?

धुन्धः —( दूरभाषणाद्दूरे ) निन्द्रां याति ( पुनर्दूरभाषणे ) वरुणः ?—किमधुनापि नागतः ? अशोकाकचरौ—हुँ—हुँ—हुँ—सिद्धान्तितम्—हुँ—हुँ। यन्त्रं यथास्थानं स्थापयित्वा उच्चैर्हसति )

पुंग :—गुरो, नैतन्मे रोचते। कथं हससि ?

धन्धः—साकल्येन गिलितं बृहस्पतिदत्तं वडिशयुक्तमामिषम्। अधुना सानन्दमहमेवमहमेवमिति मर्त्यभूमौ कः किं कृतवान् तत् सर्वं एकोऽपरमहमहमिकया श्रावयति।

उर्वशी—अधुना युवयोः कोऽभिप्रायः ?

पुंग :—धौतिमेव—( हस्तं मुष्टिवद्धं करोति )

धुन्ध :—अद्य सर्वे मर्कटनृत्यं द्रक्ष्यामः। भविष्यति तदेव।

उर्वशी—तर्हि किं सिद्धान्तितम् ?

धुन्ध :—भित्तीनामपि वर्तते श्रवणेन्द्रियम्। कर्णे कथयामि।

( कर्णे कथोपकथनस्याभिनयः। सहसा नेपथ्यतः समयज्ञापको घण्टाध्वनिः)

उर्वशी—त्वरितमेहि। बहिर्गन्तव्यम्। नासीदत्र कोऽपि ( गमनोद्यता )।

धुन्ध :—( बृहस्पतेः पुस्तिकामादाय ) एतत्तु यथास्थानं रक्षितव्यम्। एहि (येन मार्गेणागतास्तेनैव त्वरितं प्रस्थिताः सर्वे। नेपथ्ये वाद्यस्यावकाशः)

( आदावेव प्रविशति कर्मव्यस्तो बृहस्पतिः )

बृहस्पति :—वरुणः कथमधुनापि नायाति ?—चिन्ताकारणमेतत्।

( ततः प्रविशतोऽशोकाकवरौ )

अशोक :—धर्मसिद्धिर्भवतु श्रावकाणाम्।

आकवर :—जयतु दीन्-इलाहिः। ( बृहस्पतिना नमस्कार-विनिमयः )

( सद्यो निद्रोत्थिता प्रविशत्यदितिः। सर्वैः सह नमस्कार-विनिमयः। सर्वे उपविशन्ति। ततः प्रविशतो धुन्ध-पुंगौ )

धुन्ध-पुंगौ :—सर्वेभ्यो नमः। ( सर्वेषां प्रतिनमस्कारः )

बृहस्पति :—( सादरम् ) सुस्वागतं युवयोः। अपि कुशलम् ?

पुंग :—हुँम्—कुशलम् ( उपविशति )।

धुन्ध :—कुतोऽस्माकं कुशलं देव ! नरकवासिनो वयम्। केन्द्रे त्वस्माकं वर्तते संकटानां बाहुल्यम्। जाने,—चिन्तया तस्य भवतोऽपि निद्राव्याघातः समुत्पन्नः। ( उपविशति )

( उर्वशी प्रविश्य )

उर्वशी—सर्वान् सबहुमानं नौमि ( नमस्करोति, अन्येषां प्रतिनमस्कारः ) (इन्द्रस्य ब्रीफकेसाख्यं पेठिकां वज्रं च नीत्वा प्रविशति घोषयन्नेव वैतालिकः। पश्चात् प्रविशतीन्द्रः, सर्वे दण्डायमाना नमस्कुर्वन्ति, इन्द्रश्च प्रतिनमस्कृत्योपविशति )

वैतालिक :—समागच्छन्ति तत्रभवन्तो महामहिम-महिमार्णवाः शताश्व-मेधयाजिनोऽगणितदैत्यदर्पदलनलब्धकीर्तयो देवराजपादाः—

( पेठिकां वज्रं च यथास्थानं संस्थाप्य बहिर्गच्छति )

इन्द्र :—मान्याः स्वर्लोकमन्त्रिपरिषत्सदस्याः,—जानन्ति भवन्तो यत् सम्मिलितप्रचेष्टया केषाञ्चिदाशु प्रतीकार्यसंकटानां समाधानोपायं निर्धारयितुमेव सभेयमाहूता। आलोच्यविषयास्तावदामन्त्रणपत्रे लिखिता आसन्। अतो वृथा कालहरणं यथा न भवति तथा वयमानुष्ठानिकप्रतिज्ञां पठित्वा प्रकृतमनुसरिष्यामः।

(इन्द्रो दण्डायमानः पठति, सर्वे दण्डायमानाः समस्वरेण पठितमनुपठन्ति। पाठावसाने इन्द्र उपविशति, ततः सर्वे उपविशन्ति )

इन्द्र :—वयं सर्वे देव-नर-प्रतिनिधयः —स्वर्लोक-मन्त्रिपरिषत्-सदस्याः— सभायामस्यां —स्वस्वविचारबुद्धिमनुसृत्य —मतं प्रकाशयन्तः— सर्वसम्मत-सिद्धान्तमाविष्कर्तुं प्रयतिष्यामहे। सर्वसम्मत-सिद्धान्तस्याभावे— अधिकसंख्यक-सदस्य-समर्थितं मतं —द्विधा-हीनचित्तेन मानयिष्यामः। अत्रालोचितं विषयं —कस्मिन्नपि विषये स्वमतं वा — गृहीतसिद्धान्त-व्यतिरेकेण — कदापि सांवादिकसकाशमन्यत्र वा—न प्रकाशयिष्यामः।

( इन्द्र उपविश्य पेटिकातः पत्राणि बहिष्कृत्य पश्यति, उर्वशी करवस्त्रेण वदनतः स्वेदं मार्ष्टि )

अदितिः—उः —पीड़ाकरोऽयमनर्थकवाक्प्रसरः ( ताम्बूलं चर्वयति )।

पुंग :—गुरो—मर्त्या इव अत्रत्या अपि जना मृषा भाषन्ते !

धुन्ध :—प्रतिज्ञा तु भंगायैव, तत्र नास्ति कोऽपि विशेषः।

बृहस्पति :—( स्वगतम् ) नाधुनापि वरुणः समागच्छति !

इन्द्र :—अधुना वयं प्रकृतमनुसरामः। अवधानमत्र यच्छन्तु भवन्तः। विदितमेतद् भवतां यदधुना राष्ट्रेऽस्मिन् सर्वक्षेत्रे दृश्यन्ते संकटाः।

वृद्धिं गता जनसंख्या, भोग्यपण्यमूल्यं क्रमवर्धमानं, शिक्षायां नैराज्यं विराजते, शिल्पे उत्पादनं ह्रासमुपैति, वृत्तिहीनानामपि संख्या मात्रामतिक्रान्ता।

( क्रमेण निद्रामग्ना अदितिस्तत उर्वशी )

अशोक :—वृत्तिहीनानां संख्यायाः परिमाणं तावज् ज्ञातुमिच्छामि।

धुन्ध :—देवराजस्य दृष्टिमाकर्षामि। शोभनं किं देवराजभाषणे प्रश्नमानीय बाधाप्रदानम्? मन्ये न जानाति परिषद्विधिं तत्र भवान् देवानां प्रियः। प्रश्नावकाशस्तावद् विभागीयमन्त्रिभाषणे।

आकवर :—नैतत् समीचीनमिति मन्ये। सत्यवकाशे, कस्यापि भाषणमाश्रित्य प्रश्नः करणीयः कस्यापि भाषणमाश्रित्य वा न करणीय इति किं शोभनम्?

पुंग :—परम्परयमेव रीतिः। भवतु देवराजस्यानुशासनमेव तत्र प्रमाणम्।

इन्द्र :—तथ्यमुक्तं धुन्ध-महोदयेन। एवमेव परिषदाचरणविधिः। यातु,—शृण्वन्तु सर्वे। सर्वत्राधुना प्रचलति विक्षोभ-प्रदर्शनव्याजेन चोच्छृङ्खलमाचरणम्। विधेयमेषां प्रतिविधानमचिरेणैव। विभागीया मन्त्रिणोऽधुना विश्लेषयन्तु स्वेषांमेव विभागानां वक्तव्यम्, संकटस्वरूपं त्राणोपायश्चाधिकृत्य। आदावेव प्रधानामात्यस्यावकाशः।

बृहस्पति :—( शान्तभावेन ) मान्याः सहकर्मिणः,—जानन्त्येव भवन्तो देवराजकथितानां सर्वेषामेव संकटानां स्वरूपाणि। अत एकैकस्य स्वरूपविश्लेषणेन नास्ति प्रयोजनमिति मे मतम्। सम्मतिश्चेद् देवराजस्य तथा भवतां, तर्हि एकैकस्मात् संकटात् कस्तावत् त्राणोपायः स एव भवत्वस्माकमालोचनाविषयः।

इन्द्र :—साधुः प्रस्तावः। भवतां सम्मतिरस्ति न वा?

अशोकाकवरौ—तदेव भवतु यत् प्रधानामात्येनोक्तम्।

धुन्ध-पुंगौ—भवतु—भवतु, तदेव भवतु।

पुंग :—( धुन्धं प्रति ) फलं तु ज्ञायते एव।

इन्द्रः —देवीनाम्—( दृष्ट्वा ) देव्यौ तावन्निद्रासुखमनुभवतः

( करताल-शब्देन जागरयति। सर्वे हसन्ति )

अदिति :—( असन्तुष्टा ) किं नु जातम् ?

( शून्यदृष्टिरुर्वशी किमपि न वुध्यते )

इन्द्र :—निद्रा तावत् सभायां न युज्यते।

अदिति :—एवम् ? परं निद्रा न ममाज्ञाकरी।

उर्वशी—नाहं निद्रितासम्। चक्षुषी निमील्य चिन्तान्विताहमासम्।

इन्द्र :—तर्हि कथयतु, भवत्याः सम्मतिरस्ति न वा ?

उर्वशी—कस्मिन्नु विषये ( सहसात्मावस्थां बुद्ध्वा ) अस्ति,—अस्त्येव।

अदिति :—सम्मतिः ? कस्मिन् ?

इन्द्र :—प्रधानामात्येन यः प्रस्तावः समुत्थापितः, अन्यैश्च समर्थितः ?

अदिति :—प्रधानामात्यस्य प्रस्तावः, अन्यैश्च समर्थितः,—तत्र कथं मम वा-

सम्मतिः। ममापि सम्मतिरस्त्येव।

पुंग :—प्रतिज्ञाभंगो जातः।

अदिति :—कथम् ?

पुंग :—किं न प्रतिज्ञातमादावेव यत् स्वविचार-बुद्धिमनुसृत्य—

बृहस्पति :—नापरस्य बुद्धिमादाय कथयति तत्र भवती।

पुंग :—परमपरेण विचारितं यत्तदेव कथयति। निद्रितया तत्रभवत्या किं

श्रुतं प्रधानामात्येन यदुक्तम् ?

धुन्ध :—( पुंगं निवारयति ) आः—यातु। ( जनान्तिकम् ) नाधुना—

तिष्ठ।

इन्द्र :—प्रथममेव तर्हि जनसंख्यावृद्धिरूपात् संकटात् त्राणोपायं चिन्तयन्तु

भवन्तः।

बृहस्पति :—तत्र परिकल्पना कार्या यथा जनसंख्या नातःपरमपि वृद्धिं याति। परं परिकल्पना-विभागीयो मन्त्री वरुणदेवो नागतः। अतो देवराज एव उपायमुद्भावयतु। (स्वगतम्) कथं नागतो वरुणः ?

इन्द्र :—सर्वस्मादेव संकटान् मोक्षाय प्रयोजनं परिकल्पनायाः। अनुपस्थितस्तावत् परिकल्पना-मन्त्री। किं तर्हि सर्वेषामेव संकटत्राणोपायानां मयैव कर्तव्यमुद्भावनम् ? भवतामत्र तर्हि किं प्रयोजनम् ?

आकवर :—नहि—नहि। अस्माभिरप्युपाय उद्भावयितव्यः। मया तु जनसंख्याह्रासोपायः कश्चिच्चिन्त्यते।

बृहस्पति :—कथयतु भवान् कोऽयमुपायः ?

आकवर :—परं तस्योपायस्यावलम्बने उपायो मयात्र न दृश्यते।

उर्वशी—अपूर्वः स उपायः, यस्यावलम्बनोपायो न ज्ञायते

( उर्वशी-धुन्ध-पुंगा विहसन्ति )।

इन्द्र :—( कष्टेन हास्यं निवारयन् ) कथयतु भवान्, कः स उपाय इति।

आकवर :—( धुन्धादीनां हास्यं दृष्ट्वा क्रुद्धः, कोपं दमयित्वा दण्डायमानो भाषणरीत्या )—मान्याः, चिन्तयन्तु भवन्तः किं तावत् स्वर्गराज्ये जनसंख्यावृद्धेः कारणम्। मम तु मते तत्र कारणद्वयम्—देवसमाजे जन्मसंख्यावृद्धिरेव प्रधानं कारणम्। सेयं देवसंख्या युगत्रयेणातिक्रान्ता त्रयस्त्रिंशत्कोटिम्। स्वर्ग-नरकवासिनरसंख्या तु वर्धते एकेनैव कारणेन। तत्तु कारणं मर्त्यलोकादत्रागमवृद्धिः। कारणविनाशे भवति कार्यनाशः। परमत्र कारणद्वयविनाशे नास्त्यस्माकं सामर्थ्यं, यतस्तन्नास्माकं वशीभूतम्। अतोऽपरः कश्चिदुपायश्चिन्तयितव्यः।

इन्द्र :—कोऽयमपर उपायः ?

आकवर :—युद्धम्। ( सर्वे विस्मिताः )

अशोक :—नहि-नहि। युद्धेन जनसंख्या स्वल्पकालस्थायिनं ह्रासमुपैति। नैतत् स्थायि समाधानम्। तदर्थं तु सद्धर्मप्रचारणमावश्यकम्। संघारामाः स्थापयितव्याः।—( धुन्ध-पुंगौ विहसतः, इन्द्रः उर्वशी च स्मितं करोति। बृहस्पतिः पर्याकुलः, अशोकस्तु कुप्यति )

अशोक :—( धुन्ध-पुंगावुद्दिश्य ) कथं हसथः ? नायं परिहासः।

धुन्ध :—( कृत्रिमगाम्भीर्येण ) नायं परिहासः ? तदेव कथयतु।

पुंग :—सत्यमेव नायं परिहास इति। जनसंख्यावृद्धिरोधाय सन्न्यासधर्मस्य प्रसारस्तु सम्यगुपायः। ( हसति )

अदिति :—किमेतदश्लीलमालोच्यते ?

इन्द्र :—( धुन्ध-पुंगौ ) भवतां किं मतम् ?

धुन्ध :—आवयोर्मतं पश्चात् प्रकाशयिष्यते। आशु निरोद्धव्या भोग्यपण्यस्य मूल्यवृद्धिः। तत्र किं करणीयं तदेवादौ चिन्तनीयम्।

पुंग :—मन्ये संकटद्वयमेतद् अंगागिभावेन युक्तम्। अतो विषयद्वयमेवाधिकृत्य प्रसरतु विवेचनमिति मे प्रस्तावः।

इन्द्र :—युक्तमभिहितं भवता। जनसंख्या वृद्धिं गता, भोग्यपण्यमूल्यमपि वर्धतेतरामधुना।

बृहस्पति :—तेनैव च दृश्यते यत्र तत्र विक्षोभः। परमत्रापि परिकल्पना करणीया यथा जनसंख्याया वा भोग्यपण्यमूल्यस्य वा वृद्धिर्न जायते। अथच नागतो वरुणदेवः, यस्तावत् परिकल्पनामन्त्री। ( बृहस्पतिरशोकमाकवरञ्चेङ्गितेन पूर्वसंकल्पितं स्मारयति )

अशोक :—( जनान्तिकम् ) आकवर ! कथय—

आकवर :—मम मतं तु पूर्वमेव व्यक्तम्। येन तेन प्रकारेण जनसंख्याह्रास एव विधेयः। तत्र तु युद्धमेव प्रकृष्टोपायः।

अशोक :—( पुनर्जनान्तिकम् ) आकवर ! नैतत् । न स्मरसि यत् परिकल्पितम् ।

आकवर :—( जनान्तिकम् ) ज्येष्ठो भवान्, कथयतु पूर्वम् ।

( उर्वशी बृहस्पतेः पुस्तिकातश्छिन्नं पत्रमिन्द्राय यच्छति, इन्द्रः पठित्वा स्मितं करोति )

बृहस्पति :—मन्ये तथ्यमभिहितं शाहेनशाहाकवरेण । सर्वसंकटस्य मूलमेव जनसंख्यावृद्धिः । ततश्च जायते भोग्यपण्यानामभावः । ततो मूल्यवृद्धिस्ततो विक्षोभः ।

उर्वशी—किन्तु शिक्षाक्षेत्रे नैराज्यस्य, शिल्पे उत्पादनह्रासस्य वा किं मूलम् ?

आकवर :—जनसंख्यावृद्धिरेव । ( अदितिः क्रमेण निद्रिता )

उर्वशी—कथम् ?

आकवर :—जनसंख्यावृद्धितोऽयं खाद्याभावः, खाद्याभावादेव शक्तिहीनाः श्रमिकाः, अत उत्पादनह्रासः । एकेनैव कारणेन वृत्तिहीनानां संख्यावृद्धिः, भाविवृत्तेरभावमाशंक्य विक्षुब्धाश्छात्रास्ततश्च शिक्षाया दुर्गतिः ।

उर्वशी—( विहस्य ) अहो ! अपूर्वमिदं विश्लेषणम् । औषधमस्य रोगस्य युद्धमेव । न किम् ?

अशोक :—सर्वस्यास्य मूलकारणं देवराजस्य कुशासनम् । नातिचिरात् प्रागेवात्र बृहस्पतिदेवस्य प्रचेष्टया प्रवर्तितं गणतन्त्रम्, तदप्यांशिकम् । संकटास्तु पूर्वमेव जाताः । अतोऽसमर्थो देवराज इन्द्रः सुशासने इति प्रमाणितम् ।

पुंग :—किमयमनास्थाप्रस्तावः ?

धुन्ध :—( स्वगतम् ) प्रवर्तितं मर्कटनृत्यम् ।

अशोक :—भवतु नाम । अनास्था-प्रस्ताव एषः ।

पुंग :—कस्तावत् समर्थकोऽस्य प्रस्तावस्य ?

आकवर :—अहमेव। वयं सर्व एवास्य प्रस्तावस्य समर्थकाः।

धुन्ध :—नैतद् युज्यते। अनास्था-प्रस्तावस्य विवेचनं किं भवति मन्त्रिपरिषत्सभायामुतो विधानसभायाम् ?

इन्द्र :—विधानसभायामेव, सैव रीतिः। परं भवन्त एव संघानां प्रतिनिधयो गणेशा नेतृवर्य्याः। भवतां मतमेव विधानसभाया अपि मतमिति मानयित्वा मया पदत्यागः क्रियते। अपरः कोऽपि भवतु देवराजः।

( इन्द्रः स्वकीयमासनं त्यक्त्वा वरुणस्य शून्य आसन उपविशति )

बृहस्पति :—अधुना जातोऽपरः संकटः। सोऽयं सांविधानिकः।

उर्वशी—नैतन्मया समर्थ्यते। कथं पदत्यागं करोति देवराजः ?

अशोकः :—पराजयमाशंक्य स्वेच्छयैव।

उर्वशी—( उत्तेजिता ) कीदृशीयमिच्छा ? स्वेच्छया संकटानयनम् ! ( अदितिं सञ्चाल्य ) भोः मातः, —मातः, —पश्यतु भवती——।

अदिति :—( निद्राजड़कण्ठेन ) कथं कोलाहलं करोषि ? किं जातम् ?

उर्वशी—देवराजः पदत्यागं करोति ?

अदिति :—कस्य पदम् ?

उर्वशी—आः—, इन्द्रो देवराजपदं त्यजति।

अशोक :—ननु त्यक्तमेव—।

अदिति :—( सर्वं बुद्ध्वा ) हुम्, किमेषा क्रीड़ा ? देवराजपदं कस्त्यक्तुमर्हति ? देवराजो देवराज एव, स तु—इन्द्रः,—नापरः।

बृहस्पति :—किन्तु देवि,—स्वयं स्वेच्छयैव पदं त्यक्तवान् तत्रभवान्। मानधनोऽसौ कथं स्ववचनमन्यथा कर्तुं शक्नोति ?

आकवर :—अपरो देवराजो निर्वाचयितव्यः—अधुनैव—अत्रैव।

अदिति :—( सक्रोधम् ) देवराजो निर्वाचयितव्यः। किमिदं शिशुहस्तगतं मोदकम्? देवराज इन्द्र एव। अतीते स एवासीद्देवराजः,—भविष्यति काले स एव स्थास्यति देवराजः।

धुन्ध :—( सकौतुकम् ) परं वर्तमाने देवराजपदं शून्यम्।—ननु प्रत्यक्षमेतत्। अपरः कोऽपि देवानां मध्यतो भवतु देवराजः। संविधानं तु माननीयमेव।

अशोक :—वृहस्पतिदेव एव भवतु देवराजः।

अदिति :—किमयं वृद्धो ब्राह्मणो भविष्यति देवराजः!

धुन्ध :—देवराजस्यायुधं तावद् वज्रम्, नासौ तदुत्तोलयितुमेव समर्थ इति मन्ये। कुतः सञ्चालनम्!

उर्वशी—उत्तोलयतु वृहस्पतिदेवो वज्रम्।

( वृहस्पतिः सन्दिग्धः )

अशोक :—( वृहस्पतिं प्रोत्साहयति ) गच्छ,—उत्तोलय—शक्नोषि—

आकवर :—एहि महाशय! ( हस्ते धृत्वा ) नैतद् गुरुभारमिति मन्ये,—उत्तोलय वज्रम्।

( वृहस्पतिरागच्छति, वज्रं हस्तद्वयेन धृत्वा महता श्रमेणाल्पमुत्तोल्य पुनः स्थापयति )

अशोकाकवरौ—उत्तोलितम्—उत्तोलितं वज्रम्। उत्तोलितम्—

धुन्ध :—अहो, घर्मोक्तो जातोऽयं वृद्ध-ब्राह्मणः—।

( करवस्त्रेण संवीजयति )

इन्द्र :—तर्हि देवो वृहस्पतिरेवाधुना देवराजः।

( वृहस्पतिः साटोपं देवराजासन उपविशति )

वृहस्पति :—नाहं वृथा कालहरणं सहे, प्रचलतु सभाकार्यम्।

धुन्ध :—वक्तव्यमस्ति मे। सर्वे संकटा इन्द्रस्य शासनकाले समुत्पन्ना इति तु सत्यमेव। परं तदासीद्देवो वृहस्पतिरेव प्रधानामात्यः,—देवगुरुरपि। निद्रित आसीत् किं तदासौ नासिकायां सर्षपतैलं प्रक्षिप्य ?

उर्वशी—सत्यमुक्तम्। तदा सर्वत्रैव प्रचलितासीद् दुर्नीतिः। तत एव जाताः संकटाः। सर्वानर्थस्य मूलं तावद् वृहस्पतिरेव।

पुंग :—अतो मयास्यापसारणमिष्यते,—अधुनैव,—अयमेव—

इन्द्र :—किमयमप्यनास्था-प्रस्तावः ?

पुंग :—निश्चितमेव,—अनास्था-प्रस्तावो मया समुत्थाप्यते।

उर्वशी पुंगश्च—( युगपत् ) मया समर्थ्यतेऽयं प्रस्तावः।

( वृहस्पतिर्भीतोऽशोकाकवरौ प्रति दृष्टिं क्षिपति )

अशोक :—मया न समर्थ्यतेऽयं पुंगानीतः प्रस्तावः।

आकवर :—मयापि न समर्थ्यते।

वृहस्पति :—( इन्द्रम् ) भवतः किं मतम् ?

अदिति :—( संकटत्राणाय ) किं विवादेन। एतावन्तं कालमासीदिन्द्रो देवराजः;—कियन्तं कालं भवतु नाम वृहस्पतिरेव देवराजः।

धुन्ध :—वृहस्पतिदेवस्य तर्हि भवतु शून्येऽवस्थानम्।

अशोक :—कथम् ?

पुंग :—यतोऽस्य विपक्षे स्वपक्षे च समसंख्यकाः सदस्याः।

धुन्ध :—( आगत्य वृहस्पतिं हस्ते आकृष्य ) उत्तिष्ठतु, स्वस्थानं व्रजतु भवान्, नाधुनापि निर्णयो जातः।

आकवर :—( वृहस्पतेरपरं करं धृत्वा ) नहि,—तिष्ठतु—तिष्ठत्वत्रैव। भवतु निर्णयः। ( सवलं स्थापयति )

उर्वशी—देवराजस्यासनमिदम्, नायं देवराजः।

अशोक :—यन्नायं देवराज इत्यपि न,—नाधुनापि जातो निर्णयः।

घुन्ध :—( सबलमाकृष्य ) उत्तिष्ठ—स्वस्थानं गच्छ।

आकवर :—( तथैव ) नहि। किं बलेनापसार्य्यते ?

पुंग :—नीत्या,—रीत्या,—सति प्रयोजने बलेन चापसार्यते
( प्राग्रेसरो भवति )

अशोक :—अहो स्पर्धा ! ( वसनान्तरालाद् असिपुत्रिकां बहिस्करोति )

घुन्ध :—( सोपहासम् ) देव, बृहस्पते,—देवराजोऽसि,—चालय वज्रम्।
( गात्रावरणाभ्यन्तरतः क्षुद्रनालिकं बहिष्करोति )

अशोक :—( जनान्तिकमाकवरम् ) किं नामास्यास्त्रस्य ?

आकवर :—क्षुद्रनालिकम्। भव सावधानम्। आधुनिकोऽयं निपुणोऽस्त्रविद्यायामिति मन्ये।

अदिति :—( सन्त्रस्ता ) अहो, किमिदमारब्धम्। सभायां कथमेवमुच्छृङ्खलाचरणम् !

उर्वशी—हस्तेऽस्य विद्यते वज्रम्। ( सोपहासम् ) प्रशमयतु तेनैव। परमुत्तोलयितुं जातो घर्माक्तः।

अदिति :—यदि नासौ वज्रं चालयितुं शक्नोति तदापसरतु। इन्द्र एव भवतु देवराजः,—जानाति स वज्रं व्यवहर्तुम्।
( घुन्ध-पुंगौ बृहस्पतिमुत्तोल्यानीय स्वस्थानमुपवेशयति )

उर्वशी—इन्द्रपक्षे एव सदस्यसंख्याधिक्यमधुना।

इन्द्र :—परं संकटत्राणोपायश्चेन्नाविष्क्रियते केनापि सदस्येन;—नाहमिच्छामि देवराजपदमधिकर्तुम्।

पुंग :—देवराज !—भवतामनुमतिश्चेदावामेव कथयिष्यावो दर्शयिष्यावश्च संकटत्राणोपायम्। परं समयः कर्तव्यः।

इन्द्र :—कः समयः ?

घुन्ध :—नातः परं स्थास्यति स्वर्ग-नरकयोर्मध्ये समयाभित्तिः।

अदिति :—को दोषः,—तदेव भवतु। सर्वे मानवाः—

बृहस्पति :—नैतद् युज्यते। पुण्यवन्तो ये ते तावत् स्वर्गमागच्छन्ति,— बहवस्तु पापमाचरन्तो नरकमागच्छन्ति। एततेव विधानम्,— चिरप्रचलिता चेयं रीतिः।

अदिति :—तिष्ठतु तव विधानं रीतिर्वा। न शक्नोषि वज्रं चालयितुं न वा जानासि संकटत्राणोपायम्। शक्नोषि संकटमुद्भावयितुं जानासि च रीतिम्।

उर्वशी—प्रचलितमत्रांशिकं गणतन्त्रम्। प्रसाराय तस्यायमेव प्रकृष्ट उपायः। अपिच नरसदस्यैरेव यदि निर्द्धार्यते नराणां भाग्यं तर्हि तत्रास्माकं नास्ति किमपि वैमत्यकारणम्। समर्थ्यते मया सानन्दमयं धुन्धमहोदयस्य प्रस्तावः।

अशोक :—नास्त्यस्मिन्नावयोः सम्मतिः। पापाचारिभिः सह कथमस्माकं सहावस्थानं युज्यते ?

आकवर :—असहनीयमेतत्। अत्र यदि लुप्यते स्वर्गनरकयोः समयाभित्ति-स्तर्हि मर्त्यलोकादपि दूरीभविष्यति सदसदाचरणयोर्भेदः।

धुन्ध :—वर्तते किं मर्त्यलोके स भेदः ? किं वा मानं सदाचरणस्य किं वासदाचरणस्य ? पृथिव्यां सर्वत्राधुना गणतन्त्रमेव राजतेतराम्। सदसदाचरणयोर्भेदस्तत्र निर्णीयते गणतन्त्र-सम्मतेन विधानेन ; फलं तु तयोस्तत्रैव भुज्यते नरैः। तत्रापि तस्यानुवर्तनेन भवति किं पिष्टपेषणम्।

पुंग :—गुरो,—किं वृथा तर्केण ? देवानां प्रिय प्रियदर्शिन्, सर्वधर्म-समन्वयविधायक शाहेनशाह,—युवयोरपीयं भेददृष्टिः ?—तर्हि स्मर्तव्यमेतदेव ( क्षुद्रनालिकं दर्शयति )। भेदनिरसने प्रकृष्टो मन्त्रो ह्येतदेव। वज्रं विना कुतोऽपि नास्त्यस्य पराजयः।

उर्वशी—अधुना जाता समुचिता नीतिशिक्षा—

( इन्द्रः स्वासनमुपविशति पुनरेव, वज्रञ्चादाय क्रीड़ाच्छलेनेव वारद्वयमास्फालयति )

इन्द्र :—पालयिष्यते युवयोः समयः, अचिरेण चूर्णयिष्यते स्वर्ग-नरकयोर्मध्ये वर्तमाना समयाभित्तिः। एतन्मयापि समीचीनं मन्यते। अधुना श्रोतुमिच्छामि संकटत्राणोपायम्। तदेव कथयतं युवाम्।

धुन्ध :—धन्यवादार्हा भवन्तः, तुष्टा वयं नरकवासिनः। अधुना कथयामि जनसंख्यावृद्धिरूपात् संकटात् त्राणोपायम्। परिसंख्यानविभागेन संगृहीतात्तथ्याद् दृश्यते यद् वैदिककालादारभ्य पौराणिककालं यावद् देवानां संख्यासीत् क्रमवर्धमाना। युगत्रयेण सा तु संख्या त्रयस्त्रिंशत् कोटिमतिक्रान्ता। परमस्मिन् युगे निरुद्धा जाता देवसंख्यावृद्धिः। मर्त्यलोकेऽपि नाधुना दृश्यते महासमरस्य कापि सम्भावना। अतस्ततः सहसागमवृद्धिसम्भावनापि नास्ति। परिसंख्यानविभागेन संकलितात्तथ्यादेतदपि ज्ञायते यद् वर्तमाने काले मर्त्यलोकादत्र समागतानां संख्या,—इतो निर्गतानां संख्यां नातिक्रामति। आगम-निर्गमयोः समता वर्तते। अधुना यदि स्वर्गान् नरकाद्वा मर्त्यलोके निर्गमनं त्वरान्वितं क्रियते, तर्हि स्वल्पेनैव कालेन अत्र जनसंख्या ह्रासमुपेष्यतीति मे मतम्। एतत्तु देवराजः स्वेच्छया कर्तुं शक्नोति चित्रगुप्तस्य माध्यस्थ्येन,—स एव सुष्ठु जानाति यत् कौशलमवलम्बितव्यमागमनिर्गमकालगणनायाम्। केचिदतिवृद्धा देवा अपि प्रेषयितव्या मर्त्यलोकेऽवताररूपेण।

अदिति :—साधु—साधु, साधुः प्रस्तावः। परं नाहं गन्तुमुत्सहे धरातलम्। तत्राधुना विद्यन्ते केचिदवताराः। निश्चितमेव ते नवीनमवतारं प्रतिरोत्स्यन्ति।

उर्वशी—नाति-जरती भवती। परं कथं वा माननीयाः परिषत्सदस्या गमिष्यन्ति धरातलम्। तत्र तु वर्तन्ते बहवो वृद्धा देवाः।

इन्द्र :—साधु। परं भोग्यपण्यानां मूल्यवृद्धिः केनोपायेन निरोद्धव्या, केनोपायेन वा तेषामुत्पादनवृद्धिः ?

पुंग :—स्वर्लोके वर्तते तावदेक एव कल्पवृक्षः। कल्पवृक्षसंख्या वर्धयितव्या।

बृहस्पति :—ज्ञातमेतत् किं माननीय-सदस्यस्य यत् कल्पवृक्षस्य फलं बीजं वा न जायते।

पुंग :—अवश्यमेव ज्ञायते। तत्रापि वर्तते उपायः। एकस्मिन् वृक्षेऽन्यवृक्ष-सन्निवेशनविद्या मयाधिगतासीत्। अनुमतिश्चेद्देवराजस्य तदाचिरेणैव कालेनाहं माननीयसदस्यानामेकैकस्मै एकैकं कल्पवृक्षमुपायनरूपेण दातुं शक्नोमि।

बृहस्पति :—( जनान्तिकम् ) अशोक, किमेतत् सम्भाव्यते ?

अशोक :—( तथैव ) सम्भाव्यत एव। प्रयोगस्तस्या विद्याया मयापि दृष्टो मर्त्यवासकाले।

उर्वशी—परमस्या विद्यायाः प्रयोगस्तु सीमित एव रक्षितव्यः।

धुन्ध :—अवश्यमेव। सम्पदां मात्राहीना वृद्धिरपि संकटं जनयति। सुसहस्याभावस्य संरक्षणमपि विधेयं शासनसौकर्याय।

इन्द्र :—( दण्डायमानः ) संकटत्राणोपायश्च साकल्येन प्रदर्शितो धुन्ध-पुंग-महोदयाभ्याम्। अतोऽद्य प्रभृति तावेव भवतां मे सहायौ,—अवसितमन्येषाममात्यानां प्रयोजनम्। विलयं यातु विधान-परिषन् मन्त्रिपरिषदा सह; अयमेव मे आदेशः। आदेशश्चायं भवतु कार्यकरोऽद्यप्रभृत्येव ( इन्द्र उपविशति, सर्वेषां पारस्परिक-दृष्टिविनिमयः )

अदिति :—निष्कृतिर्लब्धा मया। नासीदियं क्रीड़ा मे रुचिकरी।

उर्वशी—निश्चिन्ताहमधुना सवाक्चित्रनिर्माणे आत्मानं नियोजयितुं समर्था—।

बृहस्पति :—किन्तु वयम् ?

आकवर :—नैव स्वैराचारः सोढ़व्यः—।

अशोक :—निर्वाचिता वयं गणप्रतिनिधयः।

बृहस्पति :—नैतद् युज्यते देवराज! विक्षुब्धा एते विप्लवं घटयिष्यन्ति।

इन्द्र :—किं भवतां नेतृत्वेन ?

बृहस्पति :—नाहं देवराजविरोधी।

इन्द्र :—( उर्वशीप्रदत्तं पत्रं दर्शयति ) तर्हि किमिदम् ?

( बृहस्पतिर्द्रष्टुमादातुं चेष्टते, इन्द्रस्तत् पत्रमपसारयति )

बृहस्पति :—कूटलेखनमेतत, शत्रोः प्रयोगः।

इन्द्र :—शत्रोः कूटलेखनं कथं भवतां दिनलिपिपुस्तके स्थानमलभत। ( पुस्तकं दर्शयति )

अपिच कथ्यते एते विप्लवं घटयिष्यन्तीति। विप्लवदमनस्यापि कौशलं मया ज्ञायत एव। इदं वज्रम् ( वज्रमुत्तोल्य, पेटिकातश्च कशामेकामादाय ) अयं पाशः मिलित्वा—वज्रपाशः।

बृहस्पति :—कथं वरुणस्य पाशः। कुत्र वरुणः ?

इन्द्र :—समुद्रराज्ये,—प्रातरेवागच्छत् स्वर्लोकप्रतिनिधिरूपेण,—अपितु ममैव निर्देशेन।—अधुना वज्रपाशेन बद्धा भवन्तस्तिष्ठन्तु कति चिद् वत्सरान्,—भवतु संशोधितं भवतामाचरणम।—धून्ध-महोदय.—पुंग-महाभाग,—इतः—( इन्द्रो दण्डायमानः, धून्धस्तस्य दक्षिणे पुंगश्च वामे दण्डायमानौ, अन्ये च दण्डायमानाः, गायन्नेव प्रविशति वैतालिकः )

वैतालिक :— जयतु जयतु देवराजो
जयतु जनकल्याणकारी— ।
( येन ) ध्वस्तो भेदः स्वर्ग-नरकयो-
र्लब्धा सहायता धुन्ध-पुंगयोः,—
स जयतु संकटोत्तीर्णो
वज्रपाशधारी ।
जयतु जयतु देवराजो
जनकल्याणकारी ।

यवनिका

## Recent Sanskrit Sahitya Parishat Publications—

30. **Natakaparibhasa of Singabhupala**—Edited by Prof. Dr. Kalikumar Datta Sastri. Rs. 7.

31. **Daridra-Durdaivam**—(Prahasana) by Pt. Srijiva Nyāyatirtha, Rs. 6.

32. **Aranyakavilasam**—(Khaṇḍakāvyam) by Pt. Jadavendranath Nyāyatarkatīrtha, Rs. 6.

33. **Sardulasakatam**—(Prakarana) by Dr. Birendra Kumar Bhattacharyya, Rs. 6.

34. **Vestana Vyayoga**—(Prahasana) by Dr. Birendra Kumar Bhattacharya, Rs. 4.

35. **Ekalavya-Gurudakshinam**—(a Khanda kavya) by Prasanna Vidyabhusan, Rs. 6.

36. **Mandakranta Vrittam**—(a Khanda kavya) by Mahamohopadhyaya Dr. Kalipada Tarkacharyya, Rs. 10.

37. **Dharitripati Nirvachanam**—(Prahasana) by "Buroda", Rs. 4.

38. **Bhṛngadūtam**—(a Dūtakāvya) of Paramānanda ed. by Prof. Dr. Gopikamohan Bhattacharya, Rs. 4.

39. **Atha Kim**—(Satire) by "Buroda", Rs. 5.

40. **Ṣvargiya Hasanam**—(a Satire) by "Buroda", Rs. 5.

**BRĀHMAṆA-SARVASVA**

**(A Pre- Sāyaṇa Vedic Commentary)**

***By***

**HALĀYUDHA**

**EDITED WITH INTRODUCTION, CRITICAL NOTE INDICES & APPENDICES**

***By***

**PROF. DURGAMOHAN BHATTACHARYYA**

***Price Rs. 50 /-***

